॥ गोपालस्तोत्रं अथवा गोपालस्तवराजस्तोत्रम् ॥

श्री गणेशाय नमः ।

श्रीमद्गोपीजनवल्लभाय नमः ।
ॐ अस्य श्रीगोपालस्तवराजमन्त्रस्य श्रीनारद ऋषिः ।
अनुष्टुप् छन्दः । श्रीकृष्णः परमात्मा देवता ।
श्रीकृष्णप्रीत्यर्थे जपे विनोयोगः ॥

अथ ध्यानम् ।
सजलजलदनीलं दर्शितोदारशीलं
करतलधृतशैलं वेणुवाद्यै रसालम् ।
व्रजजनकुलपालं कामिनीकेलिलोलं
तरुणतुलसिमालं नौमि गोपालबालम् ॥

श्रीनारद उवाच ।
नवीननीरदश्यामं नीलेन्दीवरलोचनम् ।
बल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ॥ १॥

स्फुरद्बर्हिदलोद्बद्धनीलकुञ्चितमूर्धजम् ।
कदम्बकुसुमोद्बद्धवनमालाविभूषितम् ॥ २॥

गण्डमण्डलसंसर्गिचलत्कुञ्चितकुन्तलम् ।
स्थूलं मुक्ताफलोदारहारोद्योतितवक्षसम् ॥ ३॥

हेमाङ्गदतुलाकोटिकिरीटोज्ज्वलविग्रहम् ।
मन्दमारुतसंक्षोभचलिताम्बरसञ्चयम् ॥ ४॥

रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ।
लसद्गोपालिकाचेतो मोहयन्तं पुनः पुनः ॥ ५॥

बल्लवीवदनाम्भोजमधुपानमधुव्रतम् ।
क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ॥ ६॥

यौवनोद्भिदेहाभिः संसक्ताभिः परस्परम् ।
विचित्राम्बरभूषाभिर्गोपनारीभिरावृतम् ॥ ७॥

प्रभिन्नाञ्जनकालिन्दीजलकेलिकलोत्सुकम् ।

योधयन्तं क्वचिद्गोपान् व्याहरन्तं गवां गणम् ॥ ८॥

कालिन्दीजलसंसर्गिशीतलानिलसेविते ।
कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ॥ ९॥

रत्नभूधरसंलग्नरत्नासनपरिग्रहम् ।
कल्पपादपमध्यस्थहेममण्डपिकागतम् ॥ १०॥

वसन्तकुसुमामोदसुरभीकृतदिङ्मुखे ।
गोवर्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ॥ ११॥

सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकम् ।
खण्डिताखण्डलोन्मुक्तमुक्तासारघनाघनम् ॥ १२॥

वेणुवाद्यमहोल्लासकृतहुङ्कारनिःस्वनैः ।
सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम् ॥ १३॥

कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्तिभिः ।
दण्डपाशोद्यतकरैर्गोपालैरूपशोभितम् ॥ १४॥

नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदाङ्गपारगैः ।
प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् ॥ १५॥

य एवं चिन्तयेद्देवं भक्त्या संस्तौति मानवः ।
त्रिसन्ध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ॥ १६॥

राजवल्लभतामेति भवेत्सर्वजनप्रियः ।
अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ॥ १७॥

॥ इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे
चतुर्थरात्रे गोपालस्तवराजः सम्पूर्णः ॥